क्रुधैः शुक्लः शुक्लतरोपि शुक्ल इति वद्विष्णु-
त्वमप्यस्य सत् ॥ ७ ॥

तदेवाह वेद्यमित्यादिना अस्य श्रीरामस्य महाविष्णुत्वमेव सत् तच्च वेद्यं वेद्यवेद्यम् तदुक्तमगस्तिसंहितायाम् 'वेदवेद्ये परे पुंसि जाते दशरथात्मजे वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मनेति' हृद्यं हृदयस्य प्रियमीश्वराणामपि अत एवावद्यभिन्नमनवद्यमनिन्द्य मिति यावत् उ इति वितर्के तर्कान्तरं आह चेदिति यदि तन्महाविष्णुत्वम्पीनया पुष्टयात्म कालप्रासीनयैकादशसहस्रसंख्याकवर्षस्थितया दशवर्षसहस्राणि दश तानि चेत्युक्तेः लीलया लोकोत्तरयाप्रातत्वमनन्तरं विष्णुत्वमेव परमिदं नेति शेषश्चच्छब्दबलादिति भावः चेदेवं स्यान्कथ महोमन्त्रेश्वरः सर्वजीवकल्याण कारिणर्वागमप्रवर्तकः शिवोमन्वन्तराणां सहस्रं रामस्य मनुं कथं जजाप तदुक्तं तापनीयेमन्वन्तरसहस्रन्तु जजाप बृषभध्वज इतिश्रयंभावः परमेश्वरस्यसर्वज्ञत्वादिना वास्तव विष्नुत्वेनैवोपासनौचित्याद्रामत्वस्याल्प कालिकत्वे नावास्तवात्कथन्तथा चरितं तन्नोचितमनौचित्यात्पर कृतन्तेन तेन मन्ये श्रीरामोमहाविष्णुरेवेति ॥ ८ ॥

वेद्यंहृद्यमवद्यभिन्नसुमहाविष्णुत्वमेवास्यस

चेतल्लौकिकलीलयात्मसमया प्रासीनयापीनया
विष्णुत्वन्तदनन्तरं कथमहोमन्वन्तराणां शिवः
साहस्रं प्रजजापतारकमनुं रामस्य मन्त्रे-
श्वरः ॥ ८ ॥

अथासुर बिमोहिनी मायया श्रीरामाचरित विपिन वैम-
नस्यादिवदिदमितितन्निराकरोति नहीति अस्य महेश्वरस्या
सुरविमोहिनी माया नहि समुचिता सा माया माधुर्य्येहि वि-
राजते अवधारणेहिर्बोध्यः तत्फलित निषेधमनुवदति नन्वि-
तिप्रभोः समदैश्वर्य्येकथञ्चिदपि नतुविराजते किञ्च समता-
पाविस्तुता प्रसिद्धेः शिवस्य तदुपासनन्त त्प्रार्थनं जनोचितम्
श्रीरामस्य भूभयमुचितं जिष्नुत्वाद्विष्नुत्वाच्चेत्याह श्री-
शम्भोर्विष्णुना समतापि सम्भवतिविष्णु रुद्रान्तरंयच्चयः
श्रीगौर्य्यन्तरन्तथा ब्रूते तस्यहि मूर्खस्य वाक्यंशास्त्रविगर्हितम्,
विष्नु रुद्रान्तरं यच्चयो ब्रूते मूढधीस्तुसः नरकेषु समस्तेषु
यातनासु पतत्यधः, तुलसीमञ्जरीभिर्यः कुर्य्याद्धरि हरार्चनम्
नरलोकं समासाद्य न भूयस्तनयोभवेत्, यो विष्नुरुद्र एवासौ
योरुद्रोविधिरेवसः त्रयाणां भेदकृत्पापो नरके परिपच्यते इ-
त्यादिपुराण वाक्यैः उभयोरेकाप्रकृतिः प्रत्ययभेदाच्चभिन्नव-
द्भाति कलयति कश्चिन्मूढो हरिहरभेदं विनाशास्त्रम् इत्यभि-
युक्तवाक्येनसमताप्रसिद्धैव एवञ्चतेन समतास्तु अथानेन

महाविष्नुनाजिष्नुना रामेण सह प्रनाथनवतः प्रयाचनवतः श्रीशम्भोः सा समता न कार्य्येत्यन्वयः महाविष्नुत्वन्त्व स्योक मेवेति बोध्यम् ॥ ६ ॥

नह्यस्यासुरमोहिनी समुचितामाया महेशस्यसामाधुर्य्येर्हिविराजते न तुसदैश्वर्य्येकथञ्चित्प्रभोः। श्रीशम्भोः समतापि सम्भवति सा श्रीविष्नुनाजिष्नुनारामेणाथ सह प्रनाथनवतः कार्यामहाविष्नुना ॥ ६ ॥

ननु तर्हिमहाविष्नुः श्रीरामः शम्भोरुपासनं कथं कुरुतइत्याह शम्भोरिति राघवः प्रीत्यारुचेश्चशम्भो राधनं नित्योपासनं साधनं नैमित्तिकं पुरश्चर्य्यादिरूप माधुर्य्य एव प्रकुरुते सेतौरामेश्वर नामक शिवलिङ्ग स्थापन प्रसिद्धमेव अतएव शम्भोः प्रीत्यैयो मया कारिधर्म्मः स्वेस्वे काले माननीयोभवद्भिः नानावर्णान् भाविनो भूमिपालान् भूयो भूयो याचते रामचन्द्र इति दक्षिणादिशि तन्मुद्राङ्कितताम्रपत्रप्रसिद्धिः श्रुताः स्वयं च मधुरोमाधुर्य्यप्रियो नत्वैश्वर्य्यप्रियः अतएवोक्तं वाल्मीकीये यदब्रवोन्मान्नर लोक सत्कृतः पिता महात्मा विबुधाधिपो यमः तदेवमन्येपरमात्मनोहितं न सर्व लोकेश्वरभाव मव्ययमिति अथानिशन्तस्य श्रीशम्भोरैश्वर्य्य-

म्परापेक्षया परमाकलय्य विधार्य्य सख्यमपि प्रकुरुते तत्कीदृशं मुख्यं सर्व साधनेषु प्रधानं स्वसौख्यदम् अतएवोक्तं तत्र मित्रभावेन संप्राप्तन्नत्यजेयं कथं च नेति किम्वत् तादि सम्बन्धवत् स्वरुच्यैवपितृत्वगुरुत्वाद्यरी करोति भवति च स श्रीमान् सर्व प्रशस्तानित्य लक्ष्मीसम्पन्नपरः स्वतन्त्रो महा स्ववशीपरन्तु प्रेम्णस्थे मय्यस्मिन्नेवं यत्सुमन्त्रणं तत्तन्त्रस्तद्वशीभूतः सचासौपुरुषश्चेति ॥ १० ॥

शम्भोराधन साधनं प्रकुरुते माधुर्य्यएवानिशन्तस्यैश्वर्य्यमथा कलय्यमधुरः प्रीत्यारुचेराघवः । मुख्य सख्यमपिस्वसौख्यद महोतातादि सम्बन्धवत्प्रेमस्थेम सुमन्त्रतन्त्रपुरुषः श्रीमान्स्वतन्त्रः परः ॥ १० ॥

श्रीरामे विष्णुत्वम्प्रकारान्तरेण साधयेत् श्रीविष्णुत्वमिति किञ्च प्रपञ्चावने जगत्या लतार्थेद्विति सुतैवविश्नुत्वमञ्चति विष्णुभावमाकारं धर्म्मञ्च प्राप्नोति सैव पुरुषाधिकारतया ममवनं करोतीतिभावः अतएवाह सुरचनेति शोभनरचनवती अनेन प्रकृति द्वारा सृष्टि कर्तृत्वमपिध्वनितम् अतएव श्रीरामानुजाचार्य्येण मन्त्रार्थ व्याख्यायामागमीय बचनं लिखितम् सा सर्वजगतां नेत्री सीताविष्णुस्वरूपिणीयस्याः

कटाक्षमात्रेण मूलप्रकृति सम्भव इति नेत्री नायिका स्वामिनीतियावत् अतएवाभिदधातितन्त्रेयन्त्रितेतिकाञ्च्यासश्रितं संस्थापितं शोभायस्या इति श्रीकाञ्चनस्य जाम्बूनदादेः श्रीरिवश्रीर्यस्याइति विशेषणद्वयं शोभार्थम् परासर्वतः कारण कारणत्वादितिभावः अतएवाह नियमतोमाहात्म्यत इति परत्वेहेतुः तथा च शक्ति शक्तिमतोरभेदात्पत्न्या अर्द्धाङ्गि त्वस्थप्रसिद्धेस्तयोः श्रीजनकनन्दिनी श्रीरघुनन्दनयोः प्रकरणा द्बुद्धिस्थ त्वाच्चभेदमिदज्ञानेनाभेदेन मुनीशभणितौबाल्मीकीये विष्णुत्वमप्याश्रितमितिसम्बन्धः ॥ ११ ॥

श्रीविष्णुत्वमथाञ्चतिक्षितिसुताकिञ्चप्रपञ्चावने काञ्चीसञ्जितशोभनासुरचना श्रीकाञ्चनश्राः परा। तन्त्रेयन्त्रितवामतोनियमतोमाहात्म्यतोभेद भिदज्ञाने नाथतपोर्म्मुनीश भणितौ विष्णुत्वमप्याश्रितम् ॥ ११ ॥

प्रकारान्तरेण परत्वमभिदधाति विष्णोरिति अगस्यमुनिम्प्रति स्वयमेव श्रीरामेण श्रीवायुसूनोयु द्धकर्म्मविष्णोप्यधि अधिकं कथितम् तदुक्तं बाल्मीकीये नहीन्द्रस्य न रुद्रस्य न विष्णोर्वित्तपस्य च तानि कर्माणि श्रूयन्ते यानियुद्धे हनूमत इति नहीदम्प्रशंसापरम्मिथ्याभूतम् बाल्मीकीये तदभावात

तदुक्तं परब्रह्म प्रसाद वाक्यतः न ते 'वागनृता क्वाप्ये काचिदत्र भविष्यतीति' श्रीरामस्य तु प्रतिज्ञैव नासत्यं कथ्यते मयेति वाक्यान्तरेण परत्वं प्रतिपादयति वाक्यइति वाक्य-- प्रतिश्रुते क्वापि कविरादि कविरिन्द्रो महेन्द्रइति कथितवान् 'इन्द्रो महेन्द्रः सुरनायको वा त्रातुं न शक्तोयुधि रामवध्यमिति' तत्र परेण महेंद्र इति पदेन विष्णुः कथ्यते सुरनायक इंद्र इत्य- नेन सख्या वृत्तिसिद्धस्तेन सएव गृह्यते इति हेतोः श्रीराम- चन्द्रः स्पष्टएव परः कीदृशः कष्टहरो जनानाम् यतः प्रदत्तसु- वरः श्रीकरः ऐश्वर्य्य सम्पादकः सत्याध्वरः सत्यमध्वरो यस्यसः एतेन तदुक्तावनृतत्वोत्प्रेक्षानप्रेक्षणीया सद्भ्योहितस्सत्यस्ता- दृशोऽध्वरोयस्यसत्याद्यामध्वरोयस्य सः ॥ १२ ॥

विष्णोरप्याधियुद्धकर्म्म कथितं श्रीवायुसूनोः स्वयं वाक्येक्वापि प्रतिश्रुते कथितवानिन्द्रोमहेन्द्रः कविः ॥ विष्णुस्तत्र परेण कथ्यत इति श्रीराम- चन्द्रः परः स्पष्टः कष्टहरः प्रदत्तसुवरः सत्याध्वरः श्रीकरः ॥ १२ ॥

प्रकारान्तरेण परत्वमाह कुण्डल्यामितियस्य कुण्डल्या- मेतादृशी ग्रहमण्डलीनिपतिता ज्योतिः शास्त्रमेव प्रतिपदि- कत्वेन वलं येषु ज्योतिःशास्त्रेषु वलं येषां वा तानि तैर्विमलैः

फलैर्म्मण्डिता नीचैः फलैः क्वेपि न खण्डिता परं कुण्ड-ल्या शुभफलानीतरफलखण्डितान्यपि भवन्ति न तथात्र तथा चैतादृशी कुण्डली नावतारिणि न वावतारेषुविदिता-तस्माच्छ्रीरामभद्रोऽमरो देवो मनोहरतरः सर्वपर इत्यर्थः।१३।

कुण्डल्यां ग्रहमण्डली निपतितायस्योत्तमै र्म्मण्डिता ज्योतिःशास्त्रवलैः फलैश्च विमलैर्नीचैः फलैः खण्डिता। नक्वापीत्यवतारिणि प्रविदिता नोवावतारेषु सातस्मात्सर्व परो मनोहरतरः श्री रामभद्रोऽमरः॥ १३ ॥

पुनः प्रकारान्तरेण परत्वमभिदधाति द्वेष्टारइति अथ-समे सर्वेऽतारा दुष्टनिकरस्य द्वेष्टारः शत्रवः संहारका भवन्ति तेषामवताराणां निग्रहणं परस्परमितिशेषः कुहचिन्नभवेत कुत-स्तत्र हेतुमाह तेषां समत्वादवतारत्वात् यदिक्वचिदवतारेणा-वतारस्य निग्रहस्स्यात्तर्हितत्कर्त्तरि निग्रहकर्त्तरिश्रुतिजुषां वेद-सेविनां भर्तरि विदांतदज्ञानिनां सर्व्वेश्वरत्वं मतम् अथराम-विनिग्रहात्परशुरामदण्डनात् श्रुतिजुषां विदांरामेऽवतारित्व धीरेवेत्यर्थः॥ १४॥

द्वेष्टा रःहि भवन्ति दुष्टनिकरस्याथावतारा-

स्समे तेषां निग्रहणं भवेन्न कुहचित्तेषांसमत्वाद्यदि।
स्यात्कर्तरि भर्तरि श्रुतिजुषामद्धावरित्वधी रामे-
रामविनिग्रहादथमतंसर्व्वेश्वरत्वम्विदाम्॥१४॥

पुनः प्रकारान्तरेण तत्वमभिदधाति तत्वमिति सतां सा-रग्राहिणां सुमतं तत्वं सिद्धान्तोमया निगदितं शर्म्माद्भुतं श-र्म्मणा तत् यद्वा अद्भुतं शर्म्म एतद्रूपंतत्वम् सच्छ्रुतम् स-द्भ्योमहद्भ्योवेदेभ्यो वा श्रुतम् न तु कपोलकल्पितम् इदं तत्वं सारवद्वोद्धृतमिव रसमस्यमास्वाद्यनीयमवश्यमेव सुहृदः सन्तोद्रुतं त्वरितमेव गृह्णन्तु कालविलम्बनायोग्यत्वात् किन्त-त्तदाह श्रीनवः श्रिया सर्व्वोत्तरयाक्षणे क्षणे नवयाः नवः क्षणे क्षणे नवः 'क्षणे क्षणे यन्नवतामुपैति तदेवरूपं रमणीयतायाः इत्युक्तेः' तादृशः श्रीराघवः सर्वतः परतरात्सौन्दर्य्यादपि पर-तरः सौन्दर्येपरतत्वहेतुमाहवने तद्विहारे तद्दर्शनेन तत्रत्यानां मुनीनाम्मोहात् सुवेषपुरुषदर्शनेनवनितानां मोहः श्रुतः 'सुवेषं पुरुषं दृष्ट्वा भ्रातरम्पितरंसुतम् क्लिद्यन्ते योनयः स्त्रीणामित्यु-क्तेः' न तु मुनीनाम् विषयोच्छिन्नं मुनीनाम्मन इत्युक्तेः वन-इत्युक्तेराभरणांगरागाद्यभावोध्वनितः अतएव धन्योमान्य-तमानामीश्वरः मुनीनां गोहेमानं पद्मपुराणवचनम् 'पुरामह-र्षयःसर्व्वे दण्डकारण्यवासिनः दृष्ट्वारामंहरितत्र भोक्तुमैच्छ-

नृसुविग्रहम्' तेसर्वेस्त्रीत्वमापन्नास्समुद्भूतश्चगोकुले कामेन-
कृष्णासंप्राप्तास्ततेतेमुक्ताभवार्णवादिति ॥ १५ ॥

तत्वं सत्सुमतं मया निगदितं शर्म्माद्भुतं सच्छ्रुतम्
सारंतस्यश्रवश्यमेव सुहृदो गृह्णन्त सन्तोद्रु तम् ।
सौन्दर्य्यादपि सर्वतः परतरा मोहान्मुनीनां वने
धन्योमानतमेश्वरः परतरः श्रीराघवः श्रीनवः, १५

पुनः प्रकारान्तरेणाहगुप्तयेति गुप्तविहारे सारत्वं प्रकृत-
पदार्थ दर्शनाभावात्तस्य वियोगेऽयोध्याध्यासिनामनन्तदुःख-
भिया सर्वेभ्योऽमृतवितरणान्दिव्यरूपकरणे ने युक्तमयोध्या-
स्थसर्वामृतादिति तस्य श्रीरामस्य परत्वं स्पष्टम् अन्यत्रक्का-
पीश्वरकृतौ तद्व्यापरेतच्छ्रुतेः सर्वामृतवितरणा श्रवणात्
साकेतनिकेतानां दुःखेन स्वस्य दुःखान्ततसुखेन सुखात्प्रकृति-
वैचित्र्यं वरदयावत्वं ततः परत्वं स्ववियोगे दुःखातिशयत्वं
सर्वामृतदानौचित्पश्चानुवदतिकिञ्चेति अस्य श्रीरामस्य प्रकृ-
तेर्हेतोस्तत्वं परत्वम् कीदृश्यास्य विचित्रप्रकृतेः विचित्रा प्र-
कृष्टाच कृतिव्यापारो यस्य तस्य तेनैव समीमृत वितरणं द्यो-
तितम् प्राहेवेतिगुरुत्वाभावः आहच तदेव अयोध्यास्थे तने
सुखदुःखयोः समत्वं तज्जनसमत्वंसुखे सुखित्वं दुःखे दुःखि-
त्वम् तस्मिन्वरदये तयोः सुखदुखयोर्ल्लेखनात् वाल्मीकीये

चलितम् व्यसनेषु मनुष्याणां भृशम्भवति दुःखितः अथाप्य-भ्युदये तेषाम्पितेव परितुष्यतीति ॥ १६ ॥

गुप्त्यास्वस्य विहारसारकरणे योध्यास्थस-र्वामृतात्स्पष्टं तस्य परत्वपीश्वरकृतावन्यत्रका--प्यश्रुतेः । किञ्चास्य प्रकृते र्विचित्रप्रकृतेस्तत्त्वं समत्वं जनेऽयोध्यास्थे सुखदुःखयोर्वरदये तस्मि-स्तयोल्लेखनात् । १६ ॥

अथ गुणविशेषेण विशेषं वर्णयति दोषैकिन्दोषदर्शन-विनैवसुहृदां सन्तोषणं पोषणं कदापिहानं नैव राज्यश्रियो दानत्वतापहरणं शश्वत्सर्वदासुहृदां योनेर्निरीक्षणं नैव धीव-रेण वानरेण रात्रिचभिल्लातात्प्रसिद्धै व क्षणउत्सवस्तत्कृते तद-र्थम् एतादृशाचरणे तस्योत्साहो जायते अतएवानुक्षणं सदा प्रोक्षणं करस्पर्शेन तदङ्गरजोमार्जनम् यस्यैवमाचरणन्तस्य विलक्षणं तस्य विलक्षणस्य सर्वपरस्य सद्गुणं को वर्णये--त्कोपि नवाङ्मनसा गोचरत्वात् ॥ १७ ।

दोषान्वेषणम तरेणसुहृदो संतोषणं पोषणं हानं नैव कदापि तापहरणं दानञ्च राज्यश्रियः । योनेनैव निरीक्षणं क्षणकृतेऽथानुक्षणं प्रोक्षणं

शाश्वतस्य विलक्षणं निपुणकः कोमद्गुणं वर्णयेत् ॥ १७ ॥

विलक्षणगुणान्तरेण वैलक्षण्यं लक्षयति दोषेति केनचिद्दोषेण विक्षेपादिना यदि सुहृन्मां विस्मरति तद्याश्वेत्तं स्मृत्वा सुगतिं न यामीति एषमम स्वभावः तदुक्तम् 'यदि वातादि दोषेणमद्भक्तो मान्नसंस्मरेत् अहं स्मरामि तं नित्यं नयामि परमां गतिमिति' शुद्धा नियतिर्नियमो यस्य तस्येदृक् सदैवोद्घोषणं सेवासान्मनसः सेवाधीनमानसस्यानसः शोकस्य शोषणं हे बुधजनाः कस्तद्गुणान्वर्णयेदित्यर्थः अनल्कीवन्जले-शोकऽमातृस्यन्दनयोरपीतिकोशः ॥ १८ ॥

दोषेणाप्यथ केनचिद्यदसुहृन्मां विस्मरत्याश्वहं तंस्मृत्वा परमां नयामिसुगतिं ह्येषस्वभावोमम । ईदृग्यस्य सदैव शुद्धनियतेरुद्घोषणं शोषणं सेवासान्मनसोऽनसोबुधजनाः कस्तद्गुणं वर्णयेत् ॥ १८ ॥

गुणान्तरेण वैलक्षण्यं वर्णयति यस्येतिहेश्रीमन् लक्ष्मीवन् सरस्वतीवन् श्रीश्वते लक्ष्मीश्वतेपत्न्याविति श्रुतेः श्रीसरस्वत्यपि यद्वाश्शस्तैश्वर्य्यवन् श्रीरामस्य सम्बोधनान् प्रसन्नाः

सुहृदोयस्यतस्ययस्यैवं नियमः ये जनाः सकृदेवैकवारमेव प्रसन्नाः शरणागता जातास्ते वयमितिशेषः इत्यर्थनपरा याचनतत्परास्ते यो भूतेभ्यो ह्यभयस्यप्रदानेत्वरति अथो तस्य ते पुरुषस्य सतां गुणानां गाने को ह्यति कृपणो दीनतरस्तत्र हेतुः । सत्रण आधिव्याधिः सत्रणसहितः अनेहः पणः कालव्यवहारवांस्तदधीन इति यावत् निपुणः कुशलीस्यात्कोपि नेति भाव । १६ ।

यस्यैवं नियमः प्रसन्नसुहृदोजाताः प्रसन्नाजनाः श्रीमन्येसकृतेवशेऽर्थन परास्तेभ्यः प्रदानेत्वरा । भूते पुरुषस्याथो गुणानां सतां स्याद्गाने निपुणोऽहि कोऽति कृपणोऽनेहः पणस्सत्रणः ॥ १६ ॥

पुनः प्रकारान्तरेण वर्णयतियस्तुष्येदिति अथयः पुरुषः कथमपि केनापि प्रकारेण क्वचित्कचिदपि उद्भवतीत्युद्भवोद्भूता नवा नवीन पूर्वास्वस्य योऽपकृतिस्तया तुष्येत् पश्चादनन्तापकारं स्वतन्त्रप्रकृतिनः स्वाधीनस्वभाववान्नस्मरतिअतः प्रभुः समर्थो मनोवशीकरणात् अहोआश्चर्य्यं तस्य सद्गुणं कोवर्णयेत्कोपि नतस्य कीदृशस्यैवम्प्रकृतेः पवित्रविहृतेः पवित्रविहारस्य शश्वद्धृतेर्निरन्तरधैर्य्यवतः सत्कृतेः सतीकृतिः

क्रियायस्य तस्य देवस्य विहारशीलस्य गुणं कीदृशमद्भुत-मागमैर्नुतमिति शिवम् ॥ २० ।

यस्तुष्येत्कथमप्यथोद्भवनखस्वे कोपकृत्या-प्रभुः यश्चान स्मरतिस्वतन्त्रकृतिनोऽनन्तापकारं क्वचित् । तस्यैव प्रकृतेः पवित्रविहृतेः शश्वद्धृतेः सत्कृतेर्देवस्याद्भुतमागमैर्नुतं महो कस्सद्गुणं वर्णयेत् ॥ २० ॥

अथ कविर्विंशतिकामुभय नामिकांस्तौति श्रीमदिति श्रीमती सदैश्वर्य्यसम्पन्नाविविचित्रा मतिर्य्यस्यां सा मिष्टं मधुरं दधाति तादृशीष्टदास्याद्धरदभवेदिति सम्बन्धः किंसम्बंधिनीत्याकांक्षायामाह श्रीमदिति श्रीमद्राम इति ललामं रमणीयं भुक्ति मुक्ति तदुच्चारकसुस्वाददायिनाम यस्य सचासौ त्रिभुवनन्तकोटि ब्रह्माण्डयावत्स्थावरजङ्गममण्डल प्रत्यवानुत्तणसमीक्षकस्तस्य सद्भद्रस्य परकल्याण रूपस्य चन्द्रस्य सवाह्लादकस्य श्रीमद्राजकुमारश्चासौ मारस्य परमायाः शोभाया धिकारं करोति तादृशस्य प्रभोः सर्वस्वामिनः स्तुत्यस्तावक भावसम्बंधे षष्ठीसास्ताविकामित्रेत्यत्रापि तद-नुष्ठत्या सम्बन्धान्तर कल्पनयान्वयः मित्रं श्रीगुरुः सत्सुखस्वरूपः परमात्मनाभिन्नः श्रुति शिरसिद्धान्तात् 'गुरुर्ब्रह्मा

गुरुर्विष्णुरित्यागमोक्तेश्च स चासावुमापतिश्च तन्नामक-
विस्तत्कृतासद्भिस्ततस्तैस्संश्रितेतिसम्बन्धः आलस्यात्पदा-
नामर्थान्तरकल्पनाभाववर्णनात्प्रमाणान्तर प्रतिपादनञ्चनेति
शिवम् रघुनन्दनवन्दनास्याद्श्रुतिमद्विंशतिका सतांमता वि-
वृतिः प्रभिताथ तच्छ्रितकविना शर्म्मभृता सुनिर्म्मिता ॥२१।

श्रीमद्राजकुमारमारपरमाधिक्कारकारप्रभोः
श्रीमद्रामललामनामकविभोः सद्भद्रचन्द्रस्यसा ।
मित्रश्रीगुरुमादुमापतिकृतासद्भिस्तुता संश्रिता
श्रीमद्विंशतिकाविचित्रमतिकास्यादिष्टदामि---
ष्टधा ॥ २१ ॥

इति श्रीमन्महामहामहोपकुमारमारपरमाधिक्कारकार--
श्रीमद्रामभद्रगुरुमित्रसमासत्त्रिपाठ्युपनामोमापतिशर्म्मनि-
र्मितस्वनिर्म्मिततद्विंशतिका विवृतिश्शर्म्मदाभूयात् ॥ २२ ।

इति श्रीमन्महामहामहीपकुमारमार कोटि
परमजयकार श्रीमद्रामभद्र गुरु मित्रसभामत्त्रि
पाठ्युपनामोमापतिशर्म्मनिर्म्मित श्रीमन्ततस्तुविं-
शतिका श्रीमद्रसिकजभतासद्गतिकास्तात् १
चतुर्विंशतियुतांकशशांकमित वत्सरे ज्येष्ठश्रेष्ठ
दलाष्टम्यामङ्कितास्तुतिरद्भुता ॥ २२ ॥




* श्रीगणेशायनमः *

अस्मत्प्राणप्रियोजीयाद्रामस्सर्वरसाश्रयः।
सख्यशृङ्गारयोर्देवोविशेषेणतदाश्रयः॥ १॥
तत्रकेचिच्छुचिंप्राहुः प्रधानन्तदुपासकाः।
श्रीरामस्याग्रहात्सख्यम्परम्परमितीर्य्यते। २॥

तथाहि नाद्यादावारोपितामरप्रतिप्रादितप्रसिद्धशृङ्गारादि-रसाष्टके दर्शिके तत्प्रसिद्धयै वरसैः शृङ्गारकारुण्येत्यादावाद्य-काव्ये शृङ्गारस्ययुवरागवृद्धिरूपस्य प्राधान्येन प्राथम्येनतत्वे-पि न सख्यवात्सल्यापेक्षयातदुचितम् तयोस्तदीयशरीरस्थि-तिसात्त्स्थितिकत्वेनव्यापकत्वात्॥

## द्वाएतासुपर्णासयुजासखायेति

श्रुतिप्रतिपादितत्वेन भागवतेपिबहुशःतदुक्त्या श्रीमद्र-घुनन्दनस्य श्रीमद्रामोपनिषदादिदर्शनेननारायणादिभिन्न-त्वेनकदापिगरुडवाहनत्वाभावेनाहं सखा ते काकुस्थेति रामा-यणीयवचनेनतत्प्रतीत्यामित्रभावेनसंप्राप्तंनत्यजेयङ्कथश्च--नेति श्रीमद्रामवाक्येन च सख्यस्यैवप्राधान्यप्रतीतेश्च यदा-यदाहिकौशल्येतिवचनेन तत्र सर्वरसान्तर्भावोपिनचारुः तत्र स-मयेशृङ्गाराभावात् अतएवभार्य्यावदितिशृंगारस्यापिदास्यादि

वदतिनानिर्द्दे शः पृथक् सङ्गच्छते नचेश्वरतयानित्यलीलास-
त्ययाचणिकत्वमयुक्तमेवेतिवक्तव्यम् माधुर्य्यप्राचुर्य्येण प्राकृ-
तप्रातिभ्याभ्युपगमात् अतएवोरसमुतोत्पत्तिः संगच्छतेति तत्र
च "पुत्रप्रयोजनाभार्य्येत्यादि" प्रतिपादनात् तदुत्तरं तत्तिर-
स्कारस्यैव धर्म्मिष्ठया च प्रतीतिरितिप्रत्येतव्यम् किञ्च तत्र
सर्वरसानान्नियतयातुल्यतयाव्यापकतोक्तेर्व्याघातएवज्ञात-
व्यः किञ्च श्रीमद्भगवत्पतञ्जलिमुनिना।

## मनुष्यो हि प्रातरुत्थायशरीर कार्य्याणिक-
## रोतिततः सुहृदां ततः सम्बन्धिनामिति ॥

प्रत्यङ्ग वर्तिलोकस्यप्रतिपादनेनेतरसाबन्धे पेक्षयास-
ख्यस्यप्रत्यङ्गतयातस्यैवतत्वसिद्धिः नचभार्य्यायाः शरीरा-
र्द्ध तयाप्रसिद्धेः श्रृंगारस्य शरीरकार्य्यत्वमेवेतिवाच्यम् मान-
सविकाररूप भावविशेषस्यरसतयातस्य शरीरकार्य्यत्वाभा-
वात् तत्र प्रातरुत्थायेत्युक्त्याशरीरशौचादिरेवतत्कार्य्यत्वेना-
भिप्रेतत्वात् किञ्चशरीरार्द्धत्वंपाणि गृहीत्याएवश्रृंगारश्चसा-
मान्यवनितादावपीति न तस्यतत्कार्य्यत्वम् किञ्चार्द्ध शरीर-
त्वमित्यतिदेशएवेति तत्र चार्द्धत्वा तदेशेपिसख्यौसोऽहमि-
त्यप्रत्यभिज्ञायाऽभेदाध्यवसायात्सर्वत्वातिदेशान्तस्यैवतत्व-
मुचितमितिदिक् ॥ किञ्च श्रीमद्रामायणे ।

आढ्योवापिदरिद्रोवादुःखितः सुखितोपिवा
सदोषोवावयस्य परमागति ॥

रितिप्रतिपादनात्तयोः परस्परं गतित्वेनतद्रसस्यैवतत्वम्
नहिपत्न्यापतिर्गतिरितिवत्पत्युः पत्नीगतिर्नितिकेनाप्यभ्यु-
पेयते किञ्चमुक्तिसाधिकाभक्ति र्न नञ्याप्रेमापरासा सख्यमेवे-
ति चतुर्वर्गफलप्रधान चरमफलप्रदत्वेन प्रधानत्वस्यैवतथाहि
अनन्यत्वमस्यसमवायविषयानात्ममंवन्धा भेदस्याग्रयेविषये-
न्वैकशब्दप्रतिपाद्यत्वस्यैक धर्म्मित्वस्य च सत्वात् सखित्वस्यै-
कस्वीकारेमसिद्धिरितिद्वातदभ्युपगमेनोभयत्रविषयतासमवा-
यश्चेतिसम्बन्धाभेदाः सखिशब्दप्रतिपाद्यत्वञ्चोभयोरिति-
द्वितीयसिद्धिः सखिशब्दव्यवहार्य्यत्वमुभयोरितितच्छब्दप्र-
वृत्ति निमित्तभूतसख्यरूपधर्म्मस्यचैकत्वं स्फुटमेवपरत्रतुश्र-
वणादिर्यन्निष्ठं समवायेनसश्रोत्र प्रभृतिर्य्यन्निष्ठं विषयत-
यास श्रोतव्यप्रभृतिर्नितिसंवन्धभेदः शब्दभेदश्च धर्म्माणाञ्च
श्रोतृत्वादिश्रोतव्यादीनाम्भेदः स्फुटएव एवम्पतिपत्न्यादौ-
भेदः फुटइति एवञ्चानन्यममत्वाविष्णौममता प्रेमसञ्जितेति-
विष्णुपुराणवचनेनानन्यममतायाएव प्रमत्वेनानन्यत्वस्यो-
क्तत्वादयं ममसखेति ममत्वस्य च स्फुटतया।तत्वंस्फुटमेव
नान्योविष्णोरित्यशब्दार्थस्तुनविष्णावित्युक्तेरितरत्रतत्सत्वे-
प्रेमत्वाप्राप्तेस्तद्वैयर्थ्यात् शुश्रूषकभृत्यादौतस्यादुर्वारतयाव--

चन शतेनापिनिषिद्धमशक्यत्वाच्चेतिदिक् तत्वमधिक मत्र-
पातञ्जलं वृत्तैमन्निर्मितायांस्पष्टम् किञ्चप्रेममात्रोद्देश्यतया--
प्रेमत्वमस्यैव ॥

नापुत्रस्यलोकोऽस्तीतिश्रुतेः ॥

स्वर्ग्गादिलोकोद्देशेनपुत्राभिलाषएतल्लौकिकाभिलाष-
स्तुस्फुट एव। "पुत्रप्रयोजनाभार्य्ये"तिप्रतिपादनात्पुत्रार्थम्भा
र्य्याभिलाषः ॥

पितारक्षतिकौमारेभर्त्तारक्षतियौवने । पुत्रस्तु-
स्थविरेभावइत्युक्तेः ॥

स्त्रियास्तत्परिगृहे रक्षणम्प्रयोजनम् पालन लालनादि-
कम्पितुर्मातुश्च संसारानलसन्तप्तस्याशिष्यस्यातिनिवृत्तयेगुरो-
र्गुरोश्चशुश्रूषार्थं शिष्यस्यदासस्यस्वपालनायस्वामिनः स्वा-
मिन्नैश्वर्य्यइत्युक्तेरैश्वर्य्यवत् एव स्वामित्वात् स्वामिनः से-
वार्थंसेवकस्येतिविदितमेव सख्यस्तु सुखस्वरूपप्रसादयिषो-
स्त्विदं प्रेम्णएवाभिलाषः अतएवलोकेश्रूयतेएतस्यराज्ञस्ते-
नराज्ञासख्यमितिनकोपिसम्बन्धविशेषः परस्तत्र अतएव श्री-
रामायणेश्रीमल्लक्ष्मणवाक्यम् ॥

अनुरक्तोस्मिभावेनभ्रातरं देवितत्वत् ॥

इति भावेन प्रीत्येत्यर्थः, तस्यस्वस्यचेत्युभयमप्यध्याहार्यंमौपमिकत्वात् तत्वतः सिद्धान्तस्तच्च भावेनेत्यत्रैवान्वजितेन भावएवप्रयोजनं नान्यदितिस्फुटमेवप्रतीतम् श्रीमल्लक्ष्मणश्च सखैव'प्रियमाणसमोवश्योभ्राताचापिसखा च मे' सौमित्रिर्ममविदितत्प्रमानमित्रमिति श्रीरामायणे श्रीरामवाक्यात् उपकारस्तुपृथिव्यागन्धइवलक्षणं स्वरूपमितिवत् पृथिव्यागन्धाव्यभिचारवन्मित्रस्यापिनकदाप्युपकार व्यभिचारः यथाजलपृथिव्योरग्निवाय्वोश्चामित्रताउपकारः स्वतएव नकस्यापितस्याभिलाषः यथावाकाशं सर्वमित्रंस्यादित्यवकाशदानेन सर्वोपकारकतैवनायकारकता तयाचेतराभिलाषशून्यत्वेसतिस्वरूपभूतोपकारकत्वसमानाधिकरणोप्रेमरूपत्वंसखित्वमितिसिद्धम् तच्च चेतनेस्वतोजडे तदारोपितमितिविवेकः एवञ्चनिर्हेतुकतास्फुटैवतच्च परस्पर मेकस्य तत्सत्वेसख्याभावएवतद्विषयश्चलघुर्महान्वायथापृथिव्यपेक्षयाकाशम्पश्चाशद्गुणमधिकम्भूतानाम्प्रत्येकन्दशगुणावृध्यभिधानात् । "समानः ख्यायतेजनै" रितिसखेति व्युत्पत्तिवोधितसमानत्वमभिलाषशून्यत्वेनैवन्युत एवजीवेश्वरयोः श्रीरामनिषादयोस्सख्यं सङ्गच्छन्ते अभिलाषश्चद्विविधः सम्वंधाभिलाषः फलाभिलाषश्च तत्रद्वितीय शून्यताभावेनविरोधोवोध्यः सम्बन्धाभिलाषस्यचमुमुक्षुत्ववददोषत्वं किञ्चास्तिमातिप्रियमित्यत्राश्रितप्रतीत्याप्रियत्वेनचानुन्दताप्रतीत्याप्रियस्यभावः-

प्रेमेतिव्युत्पत्याप्रेमानन्दयोरेकतया तस्यस्वरूपतया सख्यु-
भाव: सख्यमिति तस्यापिह्वाएतेति श्रुतयास्वस्वरूपतयासमा-
नाधिकरण्येनसमनियत्वेन च पुराणेषुभक्तित्वेनोभयो: प्र-
तिपादनाभेदाध्यवसायादेकत्वमेवोचितम् भेदेप्रमाणाभावा-
त्फलभावाच्चएवञ्चेयंभक्ति: स्वरूपमेव असखित्वमसुखि-
त्वमितित्वविधाकृतमिति भगवत्प्रसादात्स्वरूप भूतैतद्भक्ति-
लाभान्मुक्ति: सिद्धे वसावात्पत्तिकदु:खनिवृत्तिर्ब्रह्मावाप्तिरे-
वसाचस्वरूप संपत्तिह्वारैव परञ्ज्योतिरुपपद्यतेस्वेनरूपेणसम्प-
द्यतेइति श्रुतेस्तदर्थश्चयदात्तीव: स्वेनरूपेणस्वाभाविकसुखित्व-
सखित्वादिनासम्पद्यते सम्पन्नोभवति तदापरं ज्योतिर्ब्रह्मो-
पपद्यतेतादृशउपपन्नोभवतीतिनिरञ्जनंसाम्यमुपैतीति श्रुति-
संगते एवञ्चब्रह्मभावोपपत्तिरूपकैवल्यस्यसिद्धि: सखित्व-
रूप स्वरूपज्ञानादभेदनानन्दरूपस्वरूपस्यापि ज्ञानात् भेदा-
ग्रहे सच्चिदुपलक्षणतयातस्यापिज्ञानाभ्युपगमात्पृथग्भक्ति-
त्व कल्पनेफलोभाव: स्फुटएवम्प्रथपरापीयमेव भक्तितथाहि-
परत्वंफलशून्यत्वं अनन्यत्वंजाग्रत्स्वप्नयोर्बाधरहिततदाकार-
चित्तत्वम् अभेदेनतत्स्वरूपचिन्तनत्वम्परम्पठितत्वं च तत्र फ-
लशून्यत्वानमत्वेउप पादिते एवं तृतीयं तु सख्यस्यैवोत्कर्ष-
विशेष: सचेषशुक्लोपिशुक्ल: शुक्लतरोपिशुक्लइतिन्यायेन-
सामान्येविशेषस्यान्तर्भूतत्वात्सिद्धएवशत्रुत्रित्रयोरेव प्रति-
क्षणंतकार चित्ततायथामारीचस्य श्रीरामाकारतापत्रेपत्रे तृणे-

त्वखोतदिष्टिः यथाभरतस्य हनूमतश्च प्रेयस्यादीनामपितथात्वे-
सख्यमेवावगन्तव्यं शृंगाराधारेतस्याभावात् अतएववाल्मीकी-
येतत्र सखीवचेत्युक्तं परं शत्रोभक्तेरभावात्कैवल्यं न भवति त-
दाकारचित तयेतरमुक्तिरेवतस्य मुक्तौप्रमाणं भागवतम् भया-
त्कं सइत्सायुक्तिमुक्तम् अभेदेन चिंतनमपिसख्यएव समानत्वे-
ना भेदा ध्यवसायात् परपठितत्वमपि श्रवणं कीर्तनं विष्णो-
रित्यश्रवणादिदास्यान्तपाठापेक्षयास्वतः सिद्धमेव ननुततो-
पिपरमात्मनिवेदनमितिचेत् तस्यापिसख्यविशेषत्वेनावयु-
क्त्यानुवादत्वात् आत्मनिंदनं हि लक्षणयात्मपदस्यात्मीय-
परतयातस्यकर्मणः तत्फलस्य च पुत्रकलत्रादेः कायस्यचित्त-
स्यसमर्पणमुतच्च सख्यएवसम्भवति ममोक्त सर्वसख्युश्चममै-
वेतिछद्मरहितानुसन्धानएवशुद्धन्तत्संपद्यते तथा च श्रीमद्रा-
मायणे सुग्रीववाक्यं श्रीरामंप्रति ।

रजतंवासुवर्णंवाशुभान्याभरणानि च ।
अविभक्तानिसाधूनाम वगच्छंतिसाधवः ॥

साधूनां सखीनां साधवः सखाय इत्यर्थः सख्यप्रकर-
णात् चाद्दारागारादयतथारावणवाक्यं वालिम्प्रति ॥

दाराराज्य पुरंराष्ट्रं भोगाच्छादन भोजनम् ।
सर्वमेवाधि भक्तंनौभविष्यतिहरीश्वरेति ॥

दाराविभागे पादमेवाद्ये वकार्य्यन्नसुरतं ॥

सखिभार्य्यादिगमने गुरुतल्पसमं स्मृतमितिस्मृतेः,

अर्ज्जुनपादसेवासत्यकृताभारतेलिखितेदिक् भक्तिरूप सख्यश्चशुद्धमेवांतर्य्यामीश्वरविषयकतया तस्याविदितत्वा-भावेनाशुद्धत्वेतदभङ्गापत्तेः प्राकृतानामतः करणवृतेरजानात्त द्विषयेकथश्चित्तदभ्युप गमेपिप्रकृतेतदसम्भवात् प्राकृते च सख्यपदं गौणमेवताद्दशानुसन्धानाभावात् विश्वासमानाधि करणस्नेहस्यैवसख्यस्थायितयाछलस्थलेतदभावात् तदुक्त-न्तुभरतभाष्ये ॥

नमातरिनदारेषुनसोदर्य्येषुवन्धुषु ।
विश्वासस्ताद्दशः प्रेमा याद्दङ्मित्रेनिरन्तरमिति ॥

ततसत्वेत्विष्टापत्तिः किञ्चसख्यंद्विविधम् सङ्कोच भय-सहितं तदसहितञ्चयथादरिद्रस्य सम्राट्सखित्वेस्वीयन्ते देयमिति कथायांनसङ्कोचोनभयं परन्तदीयं मदीयमितिक-थायामुभयं सम्पद्यते स साजस्तुताद्दक्कथयां नभयन्नापिसङ्को-चः तत्प्रसादेनविश्वासापादेनदरिद्रस्यापितयोरभाव इति तदभावेसम्राडहं मदीयं साम्राज्यमितिसम्वदमानस्य दरिद्र-स्यलोकोपहासमवगम्यते तदर्थमेव विलम्व्यसदाव्यभिचारि त्वसदृशविभवसमर्पणेनतद्दारिद्र्यविद्राव्यतदीयकथामवितथ-

श्रमापादयतिसम्राट् एवमेवनिष्किञ्चनान्यासिनोब्रह्मवागवे-
देन ब्रह्माहमस्मीत्यादिनाविश्वाससमासीना अनन्ताखण्ड-
ब्रह्माण्डखण्डनिर्मायिकनिर्मायब्रह्मसङ्कोचादिशून्याब्रह्मा-
हमितिसदाध्यवसायवशात्तत्प्रज्ञादेन लिङ्ग भङ्ग मापद्य-
तभावमापद्यन्ते तथा चात्मनिवेदनपदस्यतन्त्रेणायमर्थः आ-
त्मनि परेशेजीवकर्तृकं स्वकीयसर्व वस्तुकर्मकं निवेदनं य-
स्मिन्सख्येतदात्मनिवेदन मिदमादौतदन्वात्मनिजीवेपरेश-
कर्तृकं तदैश्यकर्मकंनिवेदनं यस्मिन्स्तदितितथा च सख्यस्यै-
वं भेदद्वयमितिभावः अतएव श्रीरामप्रत्यङ्गदवाक्यं निसृ-
ष्टात्मासुहृत्सुचेतिनिसृष्टात्मेत्यस्यनिदितात्मेत्यर्थः अनेने-
श्वरकर्तृकनिवेदनं स्फुटमेवद्वाय ॥

चतुर्विधाभजन्तेमांजनाः सुकृतिनोऽर्जुन ।
आर्तोजिज्ञासुरर्थार्थीज्ञानी च भरतर्षभ ॥

इत्युतज्ञानिनामेवफलराहित्येन भजनमितरेषां तुतत्सा-
हित्येनेतिनिर्णयादार्तादिसम्बन्धि प्राक्सख्यम् द्वितीयन्तु-
ज्ञानिसम्बन्धीतिविवेकः अतएव गीतायांस्वीकृतन्तदनन्तरम्
उदाराःसर्वएवैतेज्ञानीत्वात्मैवमेमतम्इतिएतत्तुसुग्रीवादीनामा-
र्त्त्वेन पूर्वम्पूर्वसख्यमेवजातम्पश्चात्परम् अतएवससर्वद्भज-
तिमां सर्वभावेन भारतेत्युक्तं सर्वोभावो धर्मोयस्मिस्तत्सर्व-
भावं सख्यन्तेनेत्यर्थः भावश्च दासात्वं बन्धुत्वमभिन्नत्वमि-

त्यादिः सख्युर्दास्येनदोषः दासस्य तु सख्यमसम्भवीतिभाव
अतएवप्रह्लादहनूमत्प्रभृतिषुसर्वसम्बन्धाभिधानं मुख्यंसख्य-
मेषाम् अतएव श्रीमद्भागवते हनूमद्वाक्यम् ॥

चकारसख्येवतलक्ष्मणाग्रज ॥

इतिसर्वभावेनेत्यस्य सर्वत्वेनसर्वं जगदयमेवेतिज्ञानेनेति
यावदितितुनार्थः सर्वविदित्यत्रसर्वज्ञत्वस्येश्वरएवसत्वेनेतर--
त्रतुमृदादिकारणज्ञानेनतदीयविकारमात्रज्ञानवदेकब्रह्मज्ञाने--
नतद्व्यापतत्तज्जगज्ज्ञानं सर्वमिदमेवेत्याकारकं सामान्यमेवेति-
तस्य च पूर्वत्रपरत्रैकाकारतयासर्वविदित्यनेनैवसिद्धस्सर्वभा-
वेन यस्यवैयर्थ्यापत्तेः सर्वभावेन सर्वसम्बन्धेनोक्तरूपेणेत्य-
पिगौरवेणपराहतं सर्वसंग्राह केकेनैवसिद्धेरितिदिक् 'हे कृष्ण
हे यादव हे सखे' त्यर्जुनग्लानिवाक्ये हे सखइत्युद्देशेन हे कृ-
ष्ण हे यादवेत्यस्यैवफल्गुभावयाभिधानेनग्लानिविषयत्वम्
तत्रैतियुष्मच्छब्दशोपादानेन सम्बोधनस्याप्यावश्यकतयावल्गु-
वचनेन सखइत्यस्यैव सम्बोध्यसमर्पकतेतिबोध्यं ज्ञानीत्वा--
त्मैवमेमतमृत्युक्त्यातद्भेदप्रतीत्यातदनुसन्धानस्याप्यावश्य-
क तयातत्रसख्यरूपभजनमेवोक्तन्तत्राभेदस्यशोभनत्वात् दा-
स्यादावभेदानुसन्धानन्तदभिधानत्वाशोभनं ज्ञानेचतदनु-
सन्धानन्तदनभिधानञ्चाशोभनसशोभनमेव किमुक्त्यभाव-
यतिश्चसर्वेषां संसारिणां रूपतोऽभेदसत्वेपि तदनुसन्धान-

म्विनामुक्त्यभाववत् यद्यपिपुत्रकलत्रयोरभेदसम्भवोऽस्ति-
आत्मावैजायते पुत्र इत्याद्युक्तेस्तथापितदनुसन्धानाभिधान-
योस्तयोरशोभनतैवपितुः पत्युर्गुरुत्वे न तदाज्ञाकारित्वस्यैवौ-
चित्येनतदनौचित्यादितिदिक् ननुतदननुसन्धानेपिकेवलभ-
क्त्यैवकैवल्यसिद्धिरितिचेन्नउरभेदबोधाः कत्राकथानां वैफल्या-
पत्तेः तत्रकथं चिन्दैयधिकरणयेनान्वयोप्ययुक्तोगौरवात् प्रि-
यतद्धित दौदाचिणत्याइतिन्यायेन प्रायस्तथाप्रयोगेणवेदपुरुष-
स्यतदसम्मतत्वाच्च एवञ्चयथामारीचादीनां मत्सभावेपिचि-
तस्यतदाकारतयाकैवल्येतरमुक्तिरेवमभेदानुसन्धानेसख्यम-
न्तरेणकैवल्येतरमुक्तिप्रसङ्गएवावगन्तव्यः यद्वानेकजन्मसं-
सिद्धस्ततोयातिपरांगतिमितिन्यायेनजन्मान्तरेपूर्वसंस्कारो-
त्कर्षात्सख्यसद्भावात्कैवल्यमितिएवं केवलं ज्ञानादपिनकैव-
ल्यन्तयामुक्ति न चान्यथेपिपञ्चरात्रविरोधादनन्यभक्त्यात-
द्विपुलपादंत्यन्तदभावाद्वल्लकोनामितिशाण्डिल्यमुनिवच-
नविरोधात्पूर्वोक्तगीतावाक्यबोधितज्ञानानन्तरितभजनप्रति-
पादनविरोधाच्चगीतातात्पर्य्यान्तरपदार्थान्तरकल्पनेनमुनिव-
चन विरोधमवलम्व्यस्वैक कल्पकल्पकानामिदानीन्तनानां
ज्ञानिनामपटव्यवहितवस्तुज्ञानशून्यानां समधीतवेदवेदान्ता-
दितत्सिद्धान्तस्सम्पादकसमाधिमतः स्वाध्यायेश्वरप्रणिधान-
प्रसितपरावरज्ञ श्रीशाण्डिल्यादिमुनिकलहोपरिहार्य्यएवसोपि

घटानांनिर्मातुस्त्रिभुवनविधातुश्चकलहः ॥

इति न्यायोदाहरणभूएवप्रतिभाति एवञ्चभेदानुसन्धा-नरूपज्ञानमात्मनिवेदनरूप सख्यरूपमेव अभेदबोधक वेदान्त वाक्यानि ॥

सदारामोऽहमेवं तत्वतः प्रवदन्तिये ।
नतेसंसारिणोनूनं रामएव न संशय ॥

इत्यादीनिसख्यपराण्येवेतितत्वम् अत्रायमपिविमर्शः स्वरूपेणसंस्थितासंविन्नकाप्यंसाधिकाप्रत्युतप्रतिबन्धिकात-दुक्तम परोक्षानुभूतौ श्रीशङ्करस्वामिना ॥

कुशलाब्रह्मचार्यायां वृत्तिहीनाः सुरागिणः ।
पच्यन्तेनरके घोरेयावच्चन्द्रदिवाकराविति ॥

भक्तस्तुतत्साधिकायथाऽजामिलादीनां तथा च ऋषभ-देवसदृशानां परमहंसानां लख्यानुसन्धानाभवेपिस्वरूपस-देव सख्यकैवल्यकम् परिमितिवस्तुसम्भितसम्पन्नातुभक्तानु-सन्धानमावश्यकन्नारदादिमहामुनिसमनुष्ठितत्वात् ॥

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरोजनइतिन्यायात् ॥

किञ्चकलौकेवलभक्तिर्मुक्तिसाधिकाभवितुमर्हतिनतुके-वलवलज्ञानम् तदुक्तम्पद्मपुराणेनारदेनसत्यादित्रियुगेज्ञान वैराग्येमुक्तिसाधिके कलौतुकेवलाभक्तिर्ब्रह्मसायुज्यकारिणी,

नृणांजन्मसहस्रेणभक्तौप्रीतिर्हिजायते ।
कलौभक्तिर्कलौभक्तिर्भक्त्याकृष्णः पुरः स्थितः ॥

इतिपूर्वश्लोकेपरत्रकेवलपदोपादानेनपूर्वात्रानुपादानेन सत्यादियुगेष्वपिकेवलज्ञानवैराग्ययोर्न मुक्तिसाधकत्वमपि-तुभक्तिसम्वलितयोरेवेति तथा च सिद्धमात्मनिवेदन रूपस-ख्यभक्तौपरत्वम् एवञ्चैतत्पूर्ववर्तीभक्तीनाम्भज्यतेऽनयेति-करणव्युत्पत्यासाधनरूपताऽस्यान्तुभजनम्भक्तिरितिव्युत्प--त्याफलरूपतैवप्रेमरूपत्वात् कर्म्मसंहाररूपव्यापारवत्वेनभ---क्त्यैकरणत्वे न क्षतिः दासोपिस्वामिप्रसादवशेनसखाभवितुम-र्हतीतिपूर्वपरभक्त्योः साध्यसाधनभावेनाङ्गाङ्गिभावः स्फुट्--एवेतिविवेकः विश्वसखीतरभक्तानां कदाचित्कथञ्चित्यागस-म्भवेपियथाजयविजययोः परं सखीनां दोषसभावेपिनकथ--मपित्यागः तदुक्तं श्रीमद्रामायणे ।

मित्रभावेन संप्राप्तं नत्यजेयं कथं चन ।
दोषोयद्यपितस्यस्यात्सतामेतदगर्हितम् ॥

इदञ्च श्रीरामवाक्य प्रतिज्ञारूपन्तञ्चकथमप्यन्यथाभवितुंना-र्हतिसर्वथासत्यरूपत्वात् तदुक्तमगस्त्यसंहितायाम् ॥

वेदवेद्येपरेपुंसिजाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मनेति ॥

वाल्मीकिरभवद्ब्रह्मवाणीवाक्तस्यरूपिणी तिस्कदे
न ते वागनृताकाव्येकाचिदत्रभविष्यतीति ॥

श्रीब्रह्मणोवाक्यं श्रीवाल्मीकिम्प्रति श्रीरामसत्यतायां प्रतिज्ञायां श्रीरामायणवचनात् ।

नाभिदद्यान्नगृह्णीयात्सत्यंब्रूयान्नचानृतम् ।
एतद्ब्रह्मण्यदेवस्यरामस्यव्रतमुत्तमम् ॥
अनृतंनोक्तपूर्वम्मेनचवक्ष्येकदाचन ।
एतत्तेप्रतिजानामिसत्येनैवशपामिते ॥
अप्यहं जीवितंजह्यांत्वां वा सीतेसलक्ष्मणाम् ।
न तु प्रतिज्ञांसंमृत्यब्राह्मणेभ्योविशेषतः ॥

अतएवतेनमैत्रीभवतुतेयदिजीवितुमिच्छसीतिरावणं प्रति श्रीजनकनन्दिनोवचनम् अत्रजीवनं मुक्तरूपलक्षणम् त्यागाभावात् रावणस्यैवंसीतापराधिनोहानं भवेत् इतरेषांकाकथेतिस्फुटमभिहितञ्च श्रीजनकनन्दिनीतिसीमकारुण्यमिति एवञ्चोत्कर्षशालीफलसाधकत्वादपि परत्वमस्त्येत्यलम् स्यादेतत् आत्मनिवेदनपदेनशृङ्गारएवकुतोनादीयते आत्मपदेनदेहस्यापि ग्रहणात्तन्निवेदनस्यतत्रस्फुटत्वाद्विहरणवितरणसहसरणेषु तथा च परपठितत्वरूप परत्वन्तत्रैवसम्पन्नमिति चेन्नैवम् तथा हि सतिस्फुटप्रतिपत्तयेशांतादिरसेषुशृङ्गारपद-

स्यैव प्रयोगेण च दास्य सख्यसहचर्येण च सख्यं शृङ्गारएव-
शृंगारकस्तथा शुचिरितिस्मृताशुचिरितीरितोतिवापाठस्यैवौ-
चित्यात् पाणिगृहीतीतवास्तत्पित्रादिभिरेवनिवेदितत्वेन--
स्वत्वेनविदवदात्मनिवेदनपदव्यवहार्य्यत्वानौचित्याच्चशृंगा-
रस्यसमान्यवनितादावपिसत्वात्तत्रात्मनिवेदनभावेनतत्पर्य्या-
यत्वा भावाच्चनिवेदनं हि तत्रव्यवह्रियते यत्र निवेदनाधारक-
तृकनिवेदितपदार्थकर्म्मकदानादियोग्यतेतिस्फुटमेव तनुशा-
न्तवात्सल्यसख्यशृंगारदास्यानि पञ्चरसासज्जनसम्प्रदायप्र--
सिद्धास्तत्रशान्तस्यज्ञानाश्रयकलयप्रसिद्धतयाभक्तिर्भेदेष्वमु-
यादानम्भवतुनामतथावयस्योत्तमेप्रीति भक्तिरवमउत्तमस्यसा-
वत्सलतेतिप्रसिद्ध्यावात्सल्यस्यभक्तिभेदात् वेदेषुतदनुपादा--
नमित्यपिस्थानेपरन्त्रयाणान्तद्भेदेषुयोग्यवैवेतिद्वयोरुपादा-
नेशृंङ्गारस्यानुपादानेवैवैष मितिचेन्नपादसेवनपदेनतस्यैवो-
न्नानात्। अत्रस्फुटतयाशृंगारादिपदोपादानन्नकृतन्नतत्स्व-
रूपानिर्णयात् अनेनतुस्फुटएवतन्निर्णयः तथा हि शृंगारोद्वि-
निष्ठोद्विविध आश्रमयिषपभेदात् मलीविषयकः यसाश्रयकः
सत्कारविशेषणयोरत्युत्कर्षः मतिविषयनूः यद्वाश्रयकः पाद-
सेवनरूपोरत्युत्कर्षइतितत्रपूर्वस्य न भक्तित्वम् पत्युरपिभक्त--
त्वापत्तेरितिद्वितीयस्यैवभक्तित्वमितिस्फुटएवतत्स्वरूपनि--
र्णयः शृंगारादिपदोपादानेतुनैवसिद्धेत् पत्यावतिव्याप्तिश्चे-
तिदिक् अतएवदास्यात्पृथगुपादानम् अन्यथादासस्यापिपाद-

सेवनाधिकारितयातेनैवसिद्धमर्थ्यंस्पष्टमेव टीकाकाराणा-
मन्यथालापने भावानवबोधएवबीजम् कुशकाशावलम्बनन्या-
येनैवतल्लपनात् अतएवनह्यं तद्भक्त्याश्रयाणां नवानामभि-
युक्तोदाहृतानां मध्येपादसेवनोदाहरणेलक्ष्म्याउपादानं संग-
च्छते तथाहि ॥

श्रीविष्णोः श्रवणेपरीक्षिदभवद्वैयासकिः कीर्तने।
प्रह्लादः स्मरणेतदङ्घ्रिभजनेलक्ष्मीः पृथुः पूजने ॥
अक्रूरस्त्वभिवन्दनेकपिपतिर्दास्येथ सख्येर्जुनः।
सर्वस्वात्मनिवेदनेबलिरभूत्कैवल्यमेतेविदुरिति॥

ब्रह्मादयो बहुतिथं यदपाङ्गमोक्ष।
कामास्तयः समचरन्भगवत्प्रपन्ना।
साश्रीः स्ववासमरविन्दवनं विहाय।
यत्पादसौभगमलं भजतेनुरक्ता ॥

इति। बहुशोलक्ष्मीविषयेप्रतिपादितम् नवमे श्रीजनकनन्दि-
नीविषयेप्रियायाः पाणिस्पर्शाक्षमाभ्यामिति दशमेतत्रगोपी-
विषये।

प्रणतदेहिनांपापकर्षणं तृणचरानुगं श्रीनिकेतनम्
फणिफणार्पितंते पदाम्बुजंकृणुकुचेषुनःकृन्धिहृच्छयम्

कृन्धिहृच्छ्रयम् । चरणपङ्कजं शञ्जनं न्वतेरमणनः स्तनेष्वर्प्य याधिहन्निति ॥

वृन्दावनचम्पूकाव्येश्रृङ्गारमये ॥

वन्देकृष्णपदारविन्दयुगलंयस्मिन्कुरङ्गीदृशां ।
वक्षोजप्रणमीकृतेविलसतिस्निग्धाङ्गरागः स्वयम्

इतिदिक् तस्मात्पादसेवनपदेनश्रृङ्गारएवेतिमार्मिकाः नन्वभियुक्तोदाहरणेष्वात्मनिवेदनोदाहरणे सर्वस्वात्मनिवेदने--बलिरभूदित्युक्त्यात्मनिवेदनपदेनसख्यग्रहो विरुद्धइतिचेन्मैवम् तत्रग्रन्थ संख्य।भ्युपगमात् अतएवहरिणापिस्वशरीरं निवेदितम्प्रतिदिनन्तत्रयाति बलिरिन्द्रोभविष्यतीतिप्रसिद्धेः स्वसात्सुरेशलोकसमर्प्पणाश्चप्रतीयतेकिञ्च श्रीदामात्मनिवेदने हरिरभूदितितत्रपाठोवगन्तव्यः तत्रात्मनि परमेश्वरेजीवकर्तृकस्ववस्तुकर्मकनिवेदने श्रीदामा तथात्मनिजीवोपदेशकर्तृकस्वीय वस्तुकर्मकनिवेदनेहरिरितिप्रसिद्धैवकथा सख्यञ्चतयोः प्रसिद्धमेव श्रीदामात्मनिवेदनइत्यत्रपृथक् पदत्वंसप्तमी--समासोवेतिवोध्यम् युक्तञ्चैतत कुशजल याचनापहरणाभावान्यन्तरेणवितरणएवनिवेदनपदप्रयोगस्यानुभवसिद्धत्वादि-

तिदिक् तथा चापनिष्कर्षः पत्न्याः शृङ्गारः पादसेवनरूपत्वे-नदास्यविशेषरूपः पत्यासहशयनामना दिभिः सख्यविशेष-रूपः पत्युर्लालनादिकरणेवात्सल्याविशेषरूपः अतएवश्रीम-द्भागवतेपादसौभगमलम्भजतइतिसखउदेयिवानिति श्रीमद्रा-मायणे च 'दासीवच्च सखीवच्चमातृवच्चेतिप्रतिपादितम्' सुर-तसुखरूपतयाशृङ्गारव्यपदेशः सचक्षणिकः सोपिसख्यविशे-षएवोतनामान्तरत्वमेव प्रतिभाति न वस्त्वन्तरत्वमिति अतए-वशृंगं तत्प्रवृत्तिनिमित्तं सादृश्यादृच्छतिप्राप्नोतिशृङ्गारइति-निरुक्तिः ॥

त्वगस्सृङ्मांसमेदोस्थिद्धातवः शक्तिमूलकाः।
मज्जाशुक्रप्राणजीवधातवः शिवमूलकाः।
नवधातुरयंदेहोनवयोनिसमुद्भवः॥

इत्यागमवचनेनदेहावयवधातूनां नवत्वाच्छृंगस्यास्थि-भेदत्वमेव न वस्त्वन्तरत्वं नामान्तरत्वन्तुनिनिर्वादं तथाशृ-गारेपीतिभावः एवञ्चगौर्वाहीकइतिवच्छृंगाररसेचारोपित-शृंगत्वमिति शृंगारिणामारोपित शृंगित्वमितिसिद्धमिति विवेकिनां ततो भयं समुचितमित्यादिसूचितम् अतएवशृंगि-णोदशहस्तेनेत्यस्यादिनदूरतः परिवर्ज्जनमुक्तमभियुक्तैः तमो-द्वारमाहुर्योषितां संगिसंगमिति च श्रीमद्भागवते अत्र संग-

पदेनासक्तेरेवग्रहो तत्प्रतिषेधएवबोध्यः अतएवेश्वराणामृषी-णाञ्चतदभावेनदोषइतिबोध्यम् किञ्चभयप्रदत्वसादृश्येनापि-तदारोपः भयञ्चत्रयोऽव्यत्ययेन दिनातदुक्तम् श्रीमद्रामायणे ॥

नशोचामिप्रियादूरेनशोचामिहृतेति च ।
इदमेवहिशोचामिवयोस्याह्यतिवर्तते ॥

इति अनेनापिक्षणिकत्वं स्फुटमभिहितम् नित्यत्वेपि-लीलायाः प्राकृतप्रातिम्यमेवाभिप्रेतमिति च अथ च शृणा-तिदुःखमितिशृंगारइतिनिरुक्त्यावात्सल्यादित्रयेन्तर्भावःस्फु-टएवत्रिषुसुखजनकत्वाविशेषेण दुःखप्रणाशकत्वादितिदिक् भक्तिभेदेषुदास्यभेदपादसेवनरूपशृंगारस्यतदनुप्रतिपादनन्तु तत्रप्रायः साभिमानत्वरूपपरुषवाक्यत्वादिसत्वेनानमत्ववचन-नादितिदिक् अग्रदास्यभेदपादसेवनरूपशृंगारस्य पृथगुपा-दानेनतत्रद्वैविध्यस्फुटतया सह चर्य्येणसख्येप्यात्मनिवेदन-रूपभेदेनद्वैविध्यमुचितमेवेतिबोध्यम् एवञ्चशृंगारपरत्वकथा-स्थायिकसुखसमवेति ॥

मात्सर्य्यमुत्सार्यविचार्य्यमार्य्यैः ॥

ननुशृङ्गारविशेषस्यसख्यविशेषतयातद्वताञ्च परित्या-गाभावात्कथं श्रीजनकनन्दिन्याः प्रियानुजस्य च तत्कथेति-

चेन्न सर्वं वाक्यं सावधारणमितिन्यायेनमित्रभावेनसम्प्राप्त--मित्यत्रमित्रभावेनैव सम्प्राप्तमित्यर्थात् प्रकृते च धर्म्मान्तर--स्यापिसद्भावात् किञ्च प्रथमप्राप्तावेवमित्रभावस्यहेतुतया प्र-कृतेतदभावात् ॥

## किञ्चात्मावैजायते पुत्रइति ॥

स्मृत्यापुत्र संयोगसत्वेत्यागाभावात् किञ्चपरस्परप्री-तिविशेषशालितयापार्थवोपिशरीरतः स्वान्ततस्तदभावेनहा--नाभावात् स्नातादाविवस्वल्पकालव्यवहार्योपजन्मान्तरप्राप-कस्यहानाभावेनतस्यतत्वाभावाच्चेत्यलं श्रवणानहंकथयेति-शिवम् ॥

ससुयज्ञसमासदौहृदोमुनिमारीचहृदोविदोमुदे ॥
हृतयेतमसोनिशंतिशोभ्युदितः सख्यसरोज भास्करः ॥ १ ॥
इति श्रीमद्रामभद्रगुरुमित्रमभासत्रिपाठ्यु मापतिशर्मसम्मुदि--तसख्यसरोज भास्करोजयति ॥ वर्षेऽगाभ्राङ्कभूयुक्तेपौरेदर्शे-गुरोर्दिने उदिमायतमोहृत्यैस्वेषां सख्याब्जभास्करः ॥ २ ॥



